

# रत्नावली-हिन्दी अनुवाद

उसके (शिव के) आराधन में पैरों के अगले भाग पर खड़ी हुई, (परन्तु) स्तनों के भार से बार बार झुकाई गई, शम्भु के लालसापूर्ण तीनों नेत्रों के पथ में जाती हुई, (अतः) रोमाञ्च, पसीने तथा कम्पन से युक्त, (अतः) लजाती हुई पार्वती द्वारा (शिव के) सिर पर डालने के लिये) चाही गई (परन्तु) फेंके जाने पर (शिव और पार्वती के) बीच में बिखरती हुई पुष्पों की अञ्जलि तुम्हारी (अर्थात् सभासदों की) रक्षा करे ॥१॥

और भी —

प्रथम मिलन में उत्सुकता के कारण (पति की ओर जाने की शीघ्रता करती हुई, (लेकिन) सहज लज्जा के कारण लौटती हुई; फिर सम्बन्धी स्त्रियों के उन उन (अनेक प्रोत्साहित करने वाले) वचनों द्वारा (शिव के) सामने ले जाई गई, आगे पति को देखकर भय तथा आनन्द का अनुभव करती हुई, रोमाञ्चित हुई तथा (पार्वती की विचित्र अवस्था को देखकर) हसते हुये शिव द्वारा आलिंगन की गई गौरी तुम्हारे कल्याण के लिये होवे ॥२॥

---

पुनरपि नान्दीमेवावतारयति—औत्सुक्येनेति । नवे सगमे, औत्सुक्येन कृतत्वरा, सहभुवा ह्रिया व्यावर्तमाना, बन्धुवधूजनस्य तैः..तैः वचनैः पुनः आभिमुख्य नीता, अग्रे वरं दृष्ट्वा आत्तसाध्वसरसा, संरोहत्पुलका, हसता हरेण श्लिष्टा गौरी वः शिवाय अस्तु । इत्यन्वयः । विवाहानन्तर नवे संगमे प्रथम-समागम औत्सुक्येनोत्सुकतया कृतत्वरा कृता विहिता त्वरा शीघ्रता यया सा, सहभुवा सहजया ह्रिया लज्जया हेतुना व्यावर्तमाना पराणर्तमाना, पुनर्बन्धुवधू-जनस्य बन्धुवधूनां भ्रातृजायादीनां जनस्य समूहस्य तैस्तैरनेकविधैर्वचनैः प्रोत्साहनभाषणैराभिमुख्यं नीता पत्युः संमुखं प्रापिता, अग्रे पुरतो वरं परिणेतारं दृष्ट्वाऽवलोक्याऽऽत्तसाध्वसरसाऽऽत्तौ प्राप्तौ साध्वसरसौ भयानन्दौ यया सा, संरोहत्पुलका संरोहन्त उत्पद्यमानाः पुलका रोमाञ्चा यस्याः सा, हसता स्मयमा-नेन हरेण श्लिष्टाऽऽलिङ्गिता गौरी पार्वती वो युष्माकं शिवाय श्रेयसेऽस्तु ॥२॥

अपि च

संप्राप्तं मकरध्वजेन मथनं त्वत्तो मदर्थे पुरा ,
तद्युक्तं बहुमार्गगां मम पुरो निर्लज्ज वोढुं तव ।
तामेवानुनय स्वभावकुटिला हे कृष्णकण्ठग्रह
मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः ॥

अपि च

क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि
त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति ।
दक्षः स्तौत्यस्य पत्नी विलपति करुणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ३ ॥

---

संप्राप्तमिति श्लोकः केषुचित्पुस्तकेष्वधिक उपलभ्यते । अत्र श्लिष्टोक्त्या लक्ष्मीपार्वत्योः स्वस्वभर्तारमुद्दिश्य सरोषवचनान्याह । शिवस्य शिरसि स्थितां गङ्गां दृष्ट्वा सपत्नीद्वेषादद्रितनययोक्तमाह हे कृष्णकण्ठ, पुरा कमरध्वजेन मदर्थे त्वत्तः मथनं संप्राप्तम् । तद् निर्लज्ज मम पुरः तव बहुमार्गगां वोढुं युक्तम् ? स्वभावकुटिलां तामेव अनुनय, ग्रह मुञ्च, इति रुषा अद्रितनया यमाह स वः पायात् । इत्यन्वयः । हे कृष्णकण्ठ नीलकण्ठ पुरा पूर्वकाले मकरध्वजेन मकरो मीनो ध्वजः केतनो यस्य तेन कामदेवेन मदर्थे मत्कारणात्त्वत्तो मथनं संप्राप्तं नाशो लब्धः । तत्तस्मान्निर्लज्ज मम पुरोऽग्रे तव बहुमार्गगां बहुभिर्मार्गैर्गच्छतीति बहुमार्गगा तां त्रिपथगां गङ्गां वोढुं शिरसि धारयितुं युक्तमुचितमिति काक्वा नोचितमित्यर्थः । स्वभावकुटिलां स्वभावेन प्रकृत्या कुटिलां वक्रां तां गङ्गामेवानुनय प्रीणय । ग्रहं मद्देहग्रहणं मुञ्च त्यजेतीत्थं रुषा क्रोधेनाद्रितनया पर्वतपुत्री य शिवमाह स शिवो वो युष्मान् पायाद्रक्षतु ।

पक्षान्तरे लक्ष्म्या विष्णुं प्रति सरोषभाषितमाह-हे कृष्ण, पुरा मकरध्वजेन मदर्थे त्वत्तः मथनं संप्राप्तम्, तद् निर्लज्ज मम पुरः तव बहुमार्गगां वोढुं युक्तम् ? भावकुटिलां तामेव अनुनयस्व, कण्ठग्रहं मुञ्च, इति लक्ष्मीः रुषा यमाह स वः पायत् । इत्यन्वयः । हे कृष्ण पुरा क्षीरसागरमन्थनकाले मकरध्वजेन मकरला-

और भी—

शिव पक्ष में—"पहले मेरे कारण कामदेव ने तुम से नाश प्राप्त किया था, हे निर्लज्ज, तब क्या मेरे सामने अनेक मार्गों में बहने वाली (त्रिपथगा गंगा) को वहन करना तेरे लिये उचित है? हे नीलकण्ठ (शिव) स्वभाव से कुटिल उस (गंगा) को ही प्रसन्न कर, (मेरी) पकड़ छोड़ दे।" इस प्रकार क्रोध से पार्वती ने जिसे कहा था, वह (शिव) तुम्हारी रक्षा करे।

विष्णु-पक्ष में—"पहले मेरे कारण समुद्र ने तुमसे मंथन प्राप्त किया था, हे निर्लज्ज, तब क्या मेरे सामने अनेकों के मार्गों पर चलने वाली (कुलटा, कुब्जा) को वहन करना तेरे लिये उचित है। हे कृष्ण, हृदय से कुटिल उस (कुब्जा) को ही प्रसन्न कर (मेरे) कण्ठ का आश्लेष छोड़ दे।" लक्ष्मी ने इस प्रकार क्रोधपूर्वक जिससे कहा था, वह (विष्णु) तुम्हारी रक्षा करे।

और भी—

"क्रोध से दीप्त तीन दृष्टियों के प्रक्षेप ने यह तीनों ही अग्नियाँ बुझा दी, भय से आक्रान्त पुरोहित, जिनके दुपट्टे चञ्चल गणों ने छीन लिये थे, नीचे गिरने लगे, दक्ष (प्रजापति) स्तुति करने लगा, इसकी पत्नी करुण विलाप करने लगी और देव लोग भी भाग खड़े हुए।" इस प्रकार यज्ञ-विध्वंस के विधान के विषय में देवी (पार्वती) से कहकर अट्टहास करता हुआ शिव तुम्हारी रक्षा करे ॥३॥

---

च्छनेन समुद्रेण मदर्थे मत्कारणात् (लक्ष्म्याः सागरमन्थनोत्पन्नत्वात्) त्वत्तो मथन विलोडन संप्राप्तम्। तत्तस्मान्निर्लज्ज मम पुरस्तव बहुमार्गगां बहूनां मार्गं गच्छतीति तां कुलटां तां कुब्जा वोढुं परिणेतुं युक्तम्? भावकुटिलां भावेनाभिप्रायेण कुटिलां वक्रां तामेव कुब्जामेवानुनयस्व प्रसादय। मम कण्ठग्रहं कण्ठश्लेषं मुञ्चेति लक्ष्मीयं विष्णु रुषा कोपेनाह कथितवती स विष्णुर्वः पायात्।

क्रोधेद्धैरिति—क्रोधेद्धैः त्रिभिः दृष्टिपातैः अमी त्रयः अपि वह्नयः उपशमिताः, त्रासार्ताः चपलगणहृतोष्णीषपट्टाः ऋत्विजः अधः पतन्ति, दक्षः स्तौति, पत्नी करुणं विलपति, देवैः च अपि विद्रुतम्, इति मखमथनविधौ [illegible] आत्तहासः शिवः वः पातु। इत्यन्वयः। क्रोधेद्धैः क्रोधेन रुपेद्धैः [illegible]

अपि च

जितमुडुपतिना नमः सुरेभ्यो द्विजवृषभा निरुपद्रवा भवन्तु ।
भवतु च पृथिवी समृद्धसस्या प्रतपतु चन्द्रवपुर्नरेन्द्रचन्द्रः ॥४॥

(नान्द्यन्ते)

सूत्रधारः—अलमतिविस्तरेण । अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तो यथा—अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृता रत्नावली नाम नाटिका कृता । सा चास्माभिः श्रोत्रपरम्परया श्रुता न तु प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयितव्येति । तद् यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि । (परिक्रम्यावलोक्य च) अये, आवर्जितानि सकलसामाजिकानां मनांसीति मे निश्चयः । कुतः—

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।

---

पातैर्लोचनप्रक्षेपैरमी त्रयोऽपि दक्षिणगार्हपत्याहवनीया वह्नयोऽनय उपशमिता निर्वापिताः । चपलगणहृतोष्णीषपट्टाश्चपलैश्चञ्चलैर्गणैः शिवभटैः प्रमथादिभिर्हृता उष्णीषपट्टाः शिरोवेष्टनवस्त्राणि येषां ते, त्रासार्तास्त्रासेन भयेनार्ताः पीडिता ऋत्विजो योजका अधः पतन्ति । दक्षः प्रजापतिं स्तौति स्तुतिं करोति । अस्य दक्षस्य पत्नी करुणं दीनं यथा स्यात्तथा विलपति क्रन्दति । देवैश्चापि भयाद् विद्रुतं पलायितम् । इत्येवं मखमथनविधौ मखस्य यज्ञस्य मथनस्य विध्वंसस्य विधौ विधाने (तमधिकृत्येत्यर्थः) देव्यै पार्वत्यै शंसन् कथयन् आत्तहासः आत्तो गृहीतो हासो येन स युष्मान् पातु रक्षतु ॥३॥

जितमुडुपतिनेति—उडुपतिना जितम्, सुरेभ्यः नमः द्विजवृषभाः निरुपद्रवाः भवन्तु, पृथ्वी समृद्धसस्या भवतु, चन्द्रवपुः नरेन्द्रचन्द्रः च प्रतपतु । इत्यन्वयः । उडुपतिनोडूनां नक्षत्राणां पत्या चन्द्रेण जितं सर्वोत्कर्षेण स्थितम् । सुरेभ्यो देवेभ्यो नमः । द्विजवृषभा द्विजेषु ब्राह्मणेषु वृषभाः पुंगवा इवेति द्विजवृषभा

और भी—

नक्षत्रों का अधिपति (चन्द्रमा) सर्वोत्कर्ष को प्राप्त है, देवों को (मेरा) नमस्कार है, श्रेष्ठ ब्राह्मण उत्पीडन से मुक्त हों, पृथ्वी-समृद्ध धान्य वाली हो और चन्द्रमा के समान (सुन्दर) शरीर वाला, चन्द्र सदृश राजा प्रताप प्रदर्शित करे।

(नान्दी के पश्चात्)

सूत्रधार—बस, अधिक बस! आज वसन्तोत्सव के अवसर पर अनेक दिशाओं तथा देशों से आये हुए, राजा श्री हर्षदेव के चरण—कमलों के आश्रित राजा लोगों ने अत्यादरपूर्वक बुलाकर मुझसे कहा है—'हमारे स्वामी श्री हर्षदेव ने अपूर्व कथा-रचना से अलंकृत रत्नावली नाम की नाटिका रची है। हमने श्रोत-परम्परा से उसके विषय में सुना तो है, लेकिन उसका अभिनय नहीं देखा है। इसलिये सब लोगों के हृदय को आनन्दित करने वाले उस राजा के प्रति अत्यधिक आदर के कारण और हमारे प्रति अनुग्रह करके तुम्हें उचित अभिनय द्वारा उसका नाट्य करना चाहिए।' तो, अब मैं वेष-विन्यास करके मन-चाहा किये देता हूँ। (घूमकर और देखकर) अहा! मुझे निश्चय है कि सब हृदयों के चित्त (हमारे नाट्य के लिये) लालायित हैं। क्योंकि—

श्रीहर्ष चतुर कवि है, यह सभा भी गुणों की ग्राहक है, वत्सराज (उदयन) का चरित लोगों को लुभाने वाला है और हम अभिनय-कला में पारंगत हैं।

---

ब्राह्मणश्रेष्ठा निरुपद्रवा निर्गता उपद्रवा उपप्लवा येषां ते भवन्तु। पृथिवी समृद्ध-सस्या समृद्धं विपुलं सस्यं व्रीह्यादि यस्यां सा भवतु। चन्द्रपुरश्चन्द्रस्य वपुरिव वपुः शरीरं यस्य स नरेन्द्रचन्द्रो नरेन्द्रचन्द्र इवेति नरेन्द्रचन्द्रो राजश्रेष्ठः प्रतपतु प्रतापं दर्शयतु ॥४॥

सम्प्रति सामाजिकानां प्रोत्साहनार्थं प्रशसारूपां प्ररोचनामवतारयति—श्रीहर्ष इति। श्रीहर्षः निपुणः कविः, एषा परिषदपि गुणग्राहिणी, वत्सराज-चरितं च लोके हारि, वयं च नाट्ये दक्षाः, इह एकैकमपि वस्तु वाञ्छितफल-प्राप्तेः पदम्, किं पुनः भद्र्याग्योपचयाद् अयं गुणानां सर्वः गणः समुदितः। इत्यन्वयः। श्री हर्षस्तदाख्यः कान्यकुब्जेश्वरतया प्रसिद्धो निपुणः प्रवीणः कविः।

वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन—
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥५॥

तद् यावद् गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि। (परिक्रम्य नेपथ्याभिमुखमवलोक्य च) इदमस्मदीयं गृहम्। यावत् प्रविशामि। (प्रविश्य) आर्ये! इतस्तावत्।

(प्रविश्य)

नटी—अज्जउत्त, इअम्हि। आणवेदु अज्जो को णिओओ अणुचिट्ठीअदुत्ति।

[आर्यपुत्र, इयमस्मि। आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति।]

सूत्रधारः—आर्ये रत्नावलीदर्शनोत्सुकोऽयं राजलोकः। तद् गृह्यतां नेपथ्यम्।

नटी—(निःश्वस्य सोद्वेगम्) अज्जउत्त, णिच्चिन्तो दाणिं सि तुमम्। ता कीस ण णच्चसि। मह उण मन्दभाआए एक्का जेव्व दुहिदा। सा वि तुए कहिंपि देसन्तरे दिण्णा। कधं एव्व दूरदेसट्ठिदेण जामादुणा सह से पाणिग्गहणं भविस्सदित्ति इमाए चिन्ताए अप्पा वि ण मे पडिहदि। किं उण णच्चिदव्वम्।

[आर्यपुत्र निश्चिन्त इदानीमसि त्वम्। तत्किमिति न नृत्यसि। मम मन्दभाग्यायाः पुनरेकैव दुहिता। सापि त्वया कस्मिन्नपिदेशान्तरे दत्ता। कथमेव दूरदेशस्थितेन जामात्रा सहास्याः पाणिग्रहणं भविष्यतीत्यनया चिन्तयात्मापि न मे प्रतिभाति। किं पुनर्नर्तितव्यम्]

सूत्रधारः—आर्ये, दूरस्थितेनेत्यलमुद्वेगेन। पश्य—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥६॥

---

*एषा परिषत् सभा गुणग्राहिणी गुणान् गृह्णातीति तच्छीला।* वत्सराजचरित्र वत्सराजस्योदयनस्यैतत्काव्यनायकस्य चरितं लोके हारि मनोहरम्। वय नटाश्च नाट्येऽभिनयकर्मणि दक्षा निष्णाताः। इह प्रयोगविषय एकैकमपि वस्तु वाञ्छितफलप्राप्तेर्वाञ्छितमभीष्टं फलं सामाजिकानामावर्जनरूपं तस्य प्राप्तेः पदं स्थानम्। पुनर्भूयो (यदा) मद्भाग्योपचयान्मम भाग्यस्योपचयात् समृद्धेरयं गुणानामनुकूलवस्तूनां सर्वः सकलो गणः समूहः समुदितः संभूय मिलितः (तदा) किं वक्तव्यम् ॥५॥

अत्र नटस्य शब्दानादाय पात्रप्रवेशार्थं प्रस्तावनाभेदं कथोद्घातमवतारति—
इनमें से एक-एक वस्तु भी अभीष्ट फल की प्राप्ति का कारण होती है। फिर भला क्या (कहना, जबकि) मेरे भाग्य के उत्कर्ष से यह सब गुणों का समूह एकत्र उपस्थित हो गया है।।५।।

तो अब घर जाकर और गृहिणी को बुलाकर संगीत का प्रबन्ध करता हूँ। (प्रवेश करके) आर्ये, इधर तो आओ।

(प्रवेश करके)

नटी—आर्यपुत्र, यह आ गई। आर्य आज्ञा देवें कि क्या आज्ञा सम्पन्न की जाय ?

सूत्रधार—आर्ये ये राजा लोग रत्नावली देखने को उत्सुक हैं। इसलिये वेषविन्यास कर लीजिये।

नटी—(लम्बा सांस लेकर परेशानी के साथ) आर्यपुत्र, तुम तो अब निश्चित हो, नाचोगे क्यों नहीं ? लेकिन मुझ भाग्यहीन की तो एक ही पुत्री थी, वह भी तुमने कहीं परदेश में दे दी। इतने दूर देश में रहने वाले दामाद से इसका विवाह कैसे होगा—इस चिन्ता से मुझे तो आपा भी नहीं सुहाता, फिर भला नाचना क्या ?

सूत्रधार—आर्ये, दूर रहने वाले (पति से कैसे विवाह होगा) इसके लिये परेशानी न उठाओ। देखो—

अनुकूल भाग्य अन्य द्वीप से भी, समुद्र के मध्य से भी और दिशा के छोर से भी अभीष्ट को लाकर तुरन्त मिला देता है ॥६॥

---

द्वीपादिति। अभिमुखीभूतः विधिः अन्यस्माद् द्वीपादपि जलनिधेः मध्यादपि दिशः अन्तादपि अभिमतं झटिति आनीय घटयति। इत्यन्वयः। अनभिमुखोऽभिमुखो भूत इत्यभिमुखीभूतोऽनुकूलः सन् विधिर्दैवमन्यस्माद् द्वीपाद् द्विर्गता [illegible] द्वीपस्तस्मादपि, जलनिधेः सागरस्य मध्यादपि [illegible] झटिति द्रागानीय घटयति मेलयति ॥६॥

( नेपथ्ये )

साधु, भरतपुत्र, साधु । एवमेतत् । कः संदेहः ['द्वीपात्–' (१/६) इत्यादि पठति] ।

सूत्रधारः—(आकर्ण्य नेपथ्याभिमुखमवलोक्य सहर्षम्) आर्ये, नन्वयं मम यवीयान्भ्राता गृहीतयौगन्धरायणभूमिकः प्राप्त एव । तदेहि । आवामपि नेपथ्यग्रहणाय सज्जीभवावः ।

( इति निष्क्रान्तौ )

॥ इति प्रस्तावना ॥

---

(ततः प्रविशति यौगन्धरायणः)

यौगन्धरायणः—एवमेतत् । कः सन्देहः ? (द्वीपादन्यस्मादिति पुनः पठित्वा) अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे यानभङ्गमग्नोत्थितायाः फलकासादनं क्व च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः समाधानं रत्नमालाचिह्नायाः प्रत्यभिज्ञानादिहानयनं च । (सहर्षम्) सर्वथा स्पृशन्ति नः स्वामिनमभ्युदयाः । (विचिन्त्य) मयापि चैनां देवीहस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितम् । श्रुतं च मया—बाभ्रव्योऽपि कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य कोशलोच्छित्तये गतवता रुमण्वता मिलित इति । तदेवं निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहतीति कष्टोऽयं खलु भृत्यभावः । कुतः—

प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ
दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि
स्वेच्छाचारी भीत एवास्मि भर्तुः ॥७॥

---

प्रारम्भेऽस्मिन्निति । स्वामिनः वृद्धिहेतौ अस्मिन् प्रारम्भे दैवेन इत्थं दत्त–हस्तावलम्बे (सति) सिद्धेः भ्रान्तिः नास्ति (इति) सत्यम्, तथापि स्वेच्छाचारी (अहं) भर्तुः भीतः एव अस्मि । इत्यन्वयः । स्वामिनः प्रभोर्वत्सराजस्य वृद्धिहेतौ

(नेपथ्य में)

ठीक है, भरतपुत्र, ठीक है। ऐसा ही है। क्या सन्देह है? ('द्वीपादन्य-स्माद्' इत्यादि श्लोक का पाठ करता है)।

सूत्रधार—(सुनकर, नेपथ्य की ओर देखकर, हर्ष से) आर्ये, यह मेरा छोटा भाई यौगन्धरायण की भूमिका धारण करके आ ही गया। तो आओ। हम भी वेष-विन्यास के लिये तैयार होवें।

(दोनों निकल जाते हैं)

॥ प्रस्तावना समाप्त ॥

—: ० :—

(यौगन्धरायण प्रवेश करता है)

यौगन्धरायण—ऐसा ही है। क्या सन्देह? (द्वीपादन्यस्माद्' इत्यादि श्लोक पुनः पढकर) नहीं तो, कहाँ सिद्ध के वचन के विश्वास से मांगी गई, समुद्र में जहाज के टूट जाने से डूब कर बची हुई, सिंहल देश के राजा की पुत्री का तख्ते को पा लेना और कहाँ सिंहल देश से लौटने वाले कौशाम्बी-निवासी व्यापारी द्वारा उस दशा वाली की रक्षा और रत्नमाला के चिन्ह वाली को पहचान लेने के कारण यहाँ ले आना। (हर्ष के साथ) सब तरह हमारे स्वामी को अभ्युदय प्राप्त हो रहे हैं। (सोच कर) और मैंने भी इसे आदरपूर्वक महारानी के हाथों में सौंप कर ठीक ही किया है। और मैंने भी सुना है कि—कञ्चुकी बाभ्रव्य भी सिंहल के राजा के मन्त्री वसुभूति के साथ किसी प्रकार समुद्र से निकल कर कोशल के नाश के लिये गये हुए रुमण्वान् से मिल गया है। तो इस प्रकार लगभग सम्पन्न होता हुआ भी प्रभु का कार्य मुझे सन्तोष नहीं देता। सेवक होना, निश्चय ही, बड़ा कष्टकारी है। क्योंकि—

स्वामी की वृद्धि के निमित्तभूत, दैव के द्वारा इस प्रकार हाथ का सहारा दिये गये इस उद्योग के विषय में, सचमुच, सफलता में कोई संदेह नहीं है। तब भी, अपनी इच्छानुसार आचरण करने वाला मैं स्वामी से डरा हुआ ही हूँ ॥७॥

---

वृद्धिरभ्युदयश्चक्रवर्तित्वलाभरूपस्तस्य हेतौ कारणे रत्नावलीसमागमसम्बन्धिन्यस्मिन् प्रारम्भे कर्मणि दैवेन भाग्येनेत्थं यानभङ्गेन मग्नोत्थिताया रत्नावल्याः

( नेपथ्ये कलकलः )

यौगन्धरायणः—(आकर्ण्य) अये, यथायमभिहन्यमानमृदुमृदङ्गानुगतसंगीतमधुरः पुरः पौराणां समुच्चरति चर्चरीध्वनिस्तथा तर्कयामि मदनमहमहोत्सवं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो देव इति (ऊर्ध्वमवलोक्य) अये, कथमधिरूढ एव देवः प्रासादम् । य एषः—

विश्रान्तविग्रहकथो रतिमाञ्जनस्य
चित्ते वसन्प्रियवसन्तक एव साक्षात् ।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥८॥

तद्यावद् गृहं गत्वा कार्यशेषं चिन्तयामि । (इति निष्क्रान्तः)

इति विष्कम्भकः

(ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेषो राजा विदूषकश्च)

राजा—(सहर्षमवलोक्य) सखे वसन्तक !

विदूषकः—आणवेदु भवं । [आज्ञापयतु भवान् ।]

राजा—

राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।

---

सागरिकाछलेन वत्सराजस्यान्तःपुरे समानयनाद् दत्तहस्तावलम्बे दत्तो हस्तस्यावलम्ब आश्रयो यस्य तस्मिन् सति सिद्धेः सफलतायाः भ्रान्तिः संशयो नास्तीति सत्यं तथापि पुनरपि स्वेच्छाचारी स्वेच्छयाऽऽचरतीति स्वेच्छाचारी भर्तुरनुमतिविनाऽस्मिन् कर्मणि प्रवृत्तोऽहं भर्तुः स्वामिन उदयनाद् भीत एवास्मि ॥७॥

विश्रान्तविग्रहेति—विश्रान्तविग्रहकथः रतिमान् जनस्य चित्ते वसन् प्रियवसन्तकः वत्सेश्वरः निजमहोत्सवदर्शनाय पर्युत्सुकः साक्षात् एव कुसुमचापः इवाभ्युपैति । इत्यन्वयः । विश्रान्तविग्रहकथो विश्रान्ता समाप्ता विग्रहस्य युद्धस्य शत्रूणामभावात् कथा यस्य स पक्षे विश्रान्ता विग्रहस्य शरीरस्यानङ्गत्वात् कथा यस्य सः, रतिमान् प्रजास्वनुरागवान् पक्षे रतिः स्वप्रिया तद्वान्, जनस्य प्रजायाः

(नेपथ्य में कलकल ध्वनि)

यौगन्धरायण (सुनकर) अरे ! जैसे कि यह सामने पीटे जाते हुए मृदुल शब्द करने वाले मृदंगों के साथ गाये गये गीतों के कारण मनोहारी, नागरिकों की करतलध्वनि बढ़ रही है, उससे सोचता हूँ कि देव मदनमहोत्सव के कारण बढ़े हुए, नगर निवासियों के उल्लास को देखने के लिये राजमहल की ओर चल पड़े हैं। (ऊपर की ओर देखकर) अरे कैसे ! महाराज राजमहल पर चढ़ भी गये। जो यह—

अनुरागवान्, प्रजा के हृदय में समाये हुए, वत्स देश के महाराजा हैं, जिनकी युद्ध की बात शान्त हो गई है और जिन्हें वसन्तक प्रिय है, वह मानो, साक्षात् कामदेव हो—जिसके शरीर की कथा समाप्त हो गई है, जिसकी रति नाम की पत्नी है, जो लोगों के चित्त में वास करता है और वसन्त ऋतु जिसका सखा है—अपने महोत्सव (मदन-महोत्सव) को देखने के लिये लालायित होकर सामने आ रहे हैं। तो अब घर जाकर शेष कार्य की चिन्ता करूँ। (बाहर चला जाता है)।

विष्कम्भक समाप्त

(आसन पर स्थित और वसन्तोत्सव का वेष धारण किये राजा विदूषक के साथ प्रवेश करता है।)

राजा—(हर्ष के साथ देखकर) मित्र वसन्तक।

विदूषक—आज्ञा कीजिये।

राजा—(यह) राज्य है, जिसमें सब शत्रुओं को जीत लिया है, सारा भार योग्य मन्त्री पर रख दिया है; प्रजायें, जिनके सब उपद्रव शान्त कर दिये

---

चित्ते हृदये वसन् प्रजयाऽनुरागात् स्मिग्रमाण इत्यर्थः पक्षे जनस्य लोकस्य चित्ते मनसि वसन् परिवर्तमानः कामस्य मनसिजत्वात्, प्रियवसन्तकः प्रियः वसन्तकस्तन्नामा विदूषको यस्य, पक्षे प्रियो वसन्त-ऋतुर्यस्य, वत्सेश्वरो वत्सानां तन्नाम्नो जनपदस्येश्वरो राजदयनो निजमहोत्सवदर्शनाय निज आत्म-प्रवर्तितो यो महानुत्सवस्तस्य दर्शनाय पर्युत्सुक उत्कण्ठितः साक्षात् प्रत्यक्षं कुसुम-चाप इव कुसुमं चापो यस्य स कामदेव इवाभ्युपैत्यभिमुखमागच्छति ॥८॥

प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥१०॥

विदूषकः—(सहर्षम्) भो वअस्स, एव्वं ण्णेदम् । अहं उण जाणामि ण भवदो ण कामदेअस्स मम ज्जेव्व एकस्स बम्हणस्स अअं मअण महूसवो जस्स पिअवअस्सेण एव्व मन्तीअदि । (विलोक्य) ता किं इमिणा । पेक्ख दाव इमस्स महुमत्त कामिणीजणसअग्गाहगहिदसिङ्गकजलप्पहारणच्चन्तणाअरजणजणिदकोदूहलस्स समन्तदो घुम्मन्तमद्दलुद्दामचच्चरीसद्दमुहररच्छामुहसोहिणो पइण्णपडवासपुञ्जपिञ्जरिज्जन्तदसदिसामुहस्स सस्सिरीअदं मअण महूस्सवस्स ।

[भो वयस्य, एव न्विदम् । अहं पुनर्जानामि न भवतो न कामदेवस्य ममैवैकस्य ब्राह्मणस्यायं मदनमहोत्सवो यस्य प्रियवयस्येनैव मन्त्र्यते विलोक्य । तत्किमनेन। प्रेक्षस्व तावदेतस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतश्रृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः शब्दायमानमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरीकृतदशदिशामुखस्य सश्रीकतां मदनमहोत्सवस्य ।]

राजा—(समन्तादवलोक्य) अहो, परां कोटिमधिरोहति प्रमोदः पौराणाम् । तथा हि—

---

राज्यं निर्जितेति—निर्जितशत्रु राज्यं, योग्यसचिवे समस्तः भरः न्यस्तः, प्रजाः प्रशमिताशेषोपसर्गाः सम्यक्पालनलालिताः, प्रद्योतस्य सुता, वसन्तसमयः त्वं च इति कामः नाम्ना कामं धृतिम् उपैतु, पुनः मन्ये मम अयं महान् उत्सवः। इत्यन्वयः । निःशेषेण जिताः स्ववशमानीताः शत्रवो यस्मिन् तद् मे राज्यमस्ति। योग्ये कार्यक्षमे सचिवे मन्त्रिणि समस्तः सकलो भरो भारो न्यस्तो निहितो वर्तते । प्रजाः प्रशमिता विनाशिता अशेषा निखिला उपसर्गा उपप्लवा यासां ताः सम्यक् सुविहितं यत्पालनं रक्षणं तेन लालिताः संवर्धिताः सन्ति । प्रद्योतस्य तन्नाम्न उज्जयिनीनृपस्य सुता दुहिता वासवदत्ता रमणीयगुणाऽनुकूला च पत्नी वर्तते । भोगानुकूलो वसन्तस्य समयः कालो विद्यते । त्वं वसन्तकश्च मम प्रियकरणदक्षः सुहृद् वर्तसे । इति पूर्वोक्तैः षड्भिर्हेतुभिः कामो मदनो नाम्ना 'मदनमहोत्सव' इति नाममात्रात् कामं यथेच्छं तृप्तिं सन्तोषमुपैतु गच्छतु । पुनः

गये हैं, भली भांति रक्षा द्वारा वृद्धि को प्राप्त हैं, प्रद्योत की पुत्री (वासवदत्ता जैसी पत्नि) है, वसन्त ऋतु का समय है और तुम (अनुकूल मित्र) हो, इससे कामदेव (मदनमहोत्सव) नाम के कारण सन्तोष भले ही पा लेवे, लेकिन मै समझता हूँ कि यह महान् उत्सव मेरा (ही) है ॥६॥

विदूषक—(हर्ष के साथ) हे मित्र, हां ऐसा हो सकता है। लेकिन मुझे तो लगता है कि यह मदन-महोत्सव न आपका है और न ही कामदेव का, बल्कि अकेले आप मुझ ब्राह्मण का है, जिसका प्रिय मित्र इस प्रकार कह रहा है। (देखकर) खैर, इससे क्या ? मद्य से मस्त सुन्दरियों द्वारा स्वयं पकड़े गये और पिचकारियों के जल प्रहार से नाचते हुए नगर निवासियों द्वारा कुतूहल उत्पन्न करने वाले, चारों ओर बजाते हुए मृदंगो के कारण प्रचण्ड चर्चरी ध्वनि से गूंजती हुई सड़कों के मोड़ो से शोभा देने वाले और फेंके गये गुलाल के पुञ्ज से दसों दिशाओ के मुखों को पीला कर देने वाले इन मदन-महोत्सव की शोभा को देखो।

राजा (चारों ओर देखकर) आहा ! नागरिकों का उल्लास चरम-सीमा को पहुंच रहा है। क्योंकि—

---

परमहं मन्ये ममैवाऽय महानुत्सव इति ॥६॥

मधुमत्तकामिनीति—मधुना मद्येन मत्त: य: कामिनीनां वनितानां जनः समूहस्तेन स्वयंग्राहेण स्वेच्छया ग्रहणेन ग्रहीत:, शृ गाण्येव शृ गकाणि तेषां ये जलप्रहारास्तैर्नृत्यश्च यो नागरजनो नगरनिवासिजनस्तेन जनितं प्रेक्षकाणां कौतूहल कौतुक यस्मिन् तस्य। शब्दायमानेति—शब्दायमाना: सशब्दा ये मर्दला मृदंगास्तैरुद्दाम: प्रचण्डो यश्चर्चर्या गीतिविशेषस्य शब्दो ध्वनिस्तेन मुखराणि शब्दायमानि यानि रथ्यानां मुखानि तै: शोभते इति तस्य। प्रकीर्णपटवासेति—प्रकीर्णो विक्षिप्तो य: पटवास: पिष्टातस्तस्य पुञ्जै: समूहै: पिञ्जरीकृतानि पीतीकृतानि दशदिशानां मुखानि यस्मिन् तस्य। अत्र त्रीण्यपि मधुमत्तेत्यादीनि मदनमहोत्सवस्य विशेषणानि। सश्रीकेति—श्रिया शोभया सहित: सश्रीकस्तस्य भावस्तां शोभावत्ताम्।

कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै-
र्हेमालङ्कारभाभिर्भरनमितशिखैः शेखरैः कैङ्किरातैः।
एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति ॥१०॥

अपि च

धारायन्त्रविमुक्तसंततपयः पूरप्लुते सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे क्षण प्राङ्गणे।
उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमम् ॥ ११ ॥

विदूषकः—(विलोक्य) एदं पि दाव सुविअद्धजणभरिदसिङ्गकजलप्पहार-मुक्कसिक्कारमणोहरं वारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो। [एतदपि तावत्सुविदग्धजनभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः।]

---

कीर्णं पिष्टातकेति—वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा एषा कौशाम्बी *कुङ्कुमक्षोदगौरैः कृतदिवसमुखैः कीर्णैः पिष्टातकौघैः हेमालङ्कारभाभिः* भरनमितशिखैः कैङ्किरातैः शेखरैः शातकुम्भद्रवखचितजनेव एकपीता विभाति। इत्यन्वयः। येन नेपथ्येनाभिलक्ष्योऽनुमेयो यः स्वविभवो निजैश्वर्यं तेन विजितोऽशेषः सकलो वित्तानामीशस्य कुबेरस्य कोशो वित्तसञ्चयो यया सा, एषा पुरोदृश्यमाना कौशाम्बी कुशाम्बेन नाम राज्ञा निर्वृता नगरी वत्सानां राजधानी कुङ्कुमक्षोदगौरैः कुङ्कुमानां केसराणां क्षोदश्चूर्णं तेन गौरैररुणैरतः कृतदिवसमुखैः कृतं सम्पादितं दिवसस्य मुखमारम्भः प्रत्यूष इति यावद् यैस्तैः कीर्णैः प्रक्षिप्तैः पिष्टातकानां पटवासानामोघैः समूहैर्हेमालङ्कारभाभिर्हेम्नः स्वर्णस्यालङ्काराणां भाभिः कान्तिभिर्भरनमितशिखैर्भरेण भारेण नमिता नम्रीकृताः शिखाः शिरांसि यैस्तैः कैङ्किरातैः किङ्किरातानामशोकवृक्षाणां लक्षणयाऽशोकपुष्पाणां विकारैस्तन्निर्मितैः शेखरैः शिरोभूषणैर्हेतुभिः शातकुम्भद्रवखचितजनेव

केसर के चूर्ण से पीले, (अतः) (दिन को) उषाकाल में परिणत करने वाले, फेंके गये, सुगन्धित चूर्ण की राशियों से, स्वर्ण के आभूषणों की कान्तियों से और भार से सिरों को झुका देने वाले अशोक पुष्पों के शिरो-भूषणों से यह कौशाम्बी (नगरी), जिसने (नागरिकों के) वेष से प्रकट होने वाले अपने ऐश्वर्य से कुबेर के सम्पूर्ण कोष को जीत लिया है और जिसके निवासी जन, मानो, स्वर्ण के रस से लिप्त हैं, पीली ही पीली दीखती है ॥१०॥

और भी—

सब ओर पिचकारियों से छूटती हुई अविरत जल-धाराओं से भरे हुए और सभी अत्यधिक विमर्दन से (उत्पन्न) पङ्क में की गई क्रीडा वाले आंगन में लोगों द्वारा अत्यधिक मत्त स्त्रियों के कपोलों से गिरते हुए सिन्दूर के वर्ण से लाल पद-चिन्हों से यह सामने फर्श क्षण भर सिन्दूर वर्ण का किया जा रहा है ॥११॥

विदूषक—(देखकर) प्रिय मित्र वाराङ्गनाओं के विलास को तो देखें जो कि चतुर जनों द्वारा भरी हुई पिचकारी के जल के प्रहार के कारण छोड़ी गई सी-सी की ध्वनि से मनोहारी है।

---

शातकुम्भे नाम पर्वते भवं शातकुम्भं सुवर्णं तस्य द्रवो रसस्तेन खचिता व्याप्ता जना यस्यां सेवैकपीता, एकः प्रधानः पीतवर्णो यस्यां सा विभाति शोभते ॥१०॥

धारयन्त्रेति—सर्वतः धारायन्त्रविमुक्तसततपयः पूरप्लुते सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे प्राङ्गणे जनेन उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः चरणन्यासैः पुरः कुट्टिमं क्षणं सैन्दूरीक्रियते इत्यन्वयः। सर्वतः समन्ताद् धारायन्त्रैर्जलोद्गारयन्त्रैः शृङ्गकैर्वा करर्विमुक्तो यः सन्ततो निरन्तरः पयःपूरो जलौघस्तेन प्लुते प्लाविते तथा च सद्यस्तत्क्षण सान्द्रो निबिडो यो विमर्दः पादैर्निष्पेषस्तेन यः कर्दमः पङ्कस्तस्मिन् कृता क्रीडा यस्मिन् तस्मिन् प्राङ्गणे महत्यङ्गने जनेनोद्दामा उद्दामानोऽप्रतिबन्धं क्रीडन्त्यो याः प्रमदाः प्रकृष्टो मदो यासां तास्तासां कपोलेभ्यो गण्डेभ्यो निपतन् यः सिन्दूररागस्तेनारुणैः रक्तैश्चरणन्यासैः पादविक्षेपैः पुरोऽग्रे दृश्यमानं कुट्टिमं बद्धभूमिः क्षणमल्पकालं सिन्दूरेण रक्तं सैन्दूरमसैन्दूरं सैन्दूरं क्रियत इति सैन्दूरीक्रियते ॥११॥

राज—(विलोक्य) वयस्य, सम्यग्दृष्टं भवता । कुतः—

अस्मिन्प्रकीर्णपटवासकृतान्धकारे
दृष्टोमनाङ्मणिविभूपणरश्मिजालैः ।
पातासमुद्यतफणाकृतिशृङ्गकोऽयं
मामद्य संस्मरयतीह भुजङ्गलोकः ॥१२॥

विदूषकः—(विलोक्य) भो वअस्स, पेक्ख पेक्ख । एसा क्खु मअणिआ मअणवसविसण्ठुल वसन्ताभिणअं णच्चन्ती चूअलदिआए सह इदो ज्जेव्व आअच्छदि । [भो वयस्य, प्रेक्षस्व प्रेक्षस्व । एपा खलु मदनिका मदनवशाविसंष्ठुलं वसन्ताभिनयं नृत्यन्ती चूतलतिकया सहेत एवागच्छति ।]

(ततः प्रविशतो मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ)

चेट्यौ—

कुसुमाउहपिअदूअओ मउलाइदबहुचूअओ ।
सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥१३॥

[कुसुमायुधप्रियदूतको मुकुलायितबहुचूतकः ।
शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥१३॥]

विअसिअवउलासोअओ कङ्खिअपिअजणमेलओ ।
पडिवालणासमत्यओ तम्मइ जुवइसत्थओ ॥१४॥

---

सुविदग्धेति—सुविदग्धस्य तात्वक्रीडापटोर्जनस्य कर्तु जलभरितैः शृङ्गकैः करणैर्ये जलप्रहारा जलताडनानि तद्धेतुभिर्मुक्ता ये सीत्काराः सीदिति शब्दास्तैर्मनोहरम् । वारविलासीनीति—वारविलासिन्यो गणिकास्तासां जनः समूहस्तस्य विलसितं चेष्टितम् ।

अस्मिन् प्रकीर्णपटवासेति—अस्मिन् प्रकीर्णपटवासकृतान्धकारे मणिविभूषणरश्मिजालैः मनाग् दृष्टः उद्यतफणाकृतिशृङ्गकः अयं भुजङ्गलोकः इह अद्य मां पातालं संस्मरयति । इत्यन्वयः । अस्मिन् पुरो दृश्यमाने प्रकीर्णः क्षिप्तः

राजा—(देखकर) मित्र, तुमने खूब देखा ! क्योंकि—

बिखेरे गये गुलाल से किये गये इस अन्धकार में मणि जटित आभूषणों की किरण-समूह से कुछ-कुछ दीख पड़ने वाला, (सर्प के) फण के आकार वाली पिचकारी उठाये हुए वह कामी जनों का समूह (अन्य अर्थ—सर्पों का समूह) आज मुझे पाताल की याद दिला रहा है।

विदूषक—(देखकर) ए मित्र, देखो देखो। यह मदनिका काम-पीड़ित होने से लड़खड़ाते हुए वसन्त का अभिनय करती हुई चूतलतिका के साथ इधर ही आ रही है।

(मदनलीला का नाट्य करती हुई तथा द्विपदी-खण्ड गाती हुई दो चेटी प्रवेश करती हैं)।

दोनों चेटी—

कामदेव का प्रिय दूत, अनेक आम्र वृक्षों को मुकुलित करने वाला, (मानिनी सुन्दरियों के) प्रणय-कलह को शिथिल करने वाला, दक्षिण पवन बह रहा है ॥१३॥

---

पटवासः पिष्टातस्तेन कृतोऽन्धकारस्तस्मिन् मणिमयानि विभूषणानि मणिविभूषणानि तेषां रश्मीनां किरणानां जालैः समूहैर्मनाक् किञ्चिद् दृष्टा उद्यताः फणाकृतयः फणेवाकृतिर्येषां ते शृङ्गका येन स पक्षे फणाकृतयः शृङ्गका इव येन सोऽयं भुजङ्गानां विटानां लोक. समूहः पक्षे भुजङ्गानां सर्पाणां समूह इहाद्य मा पातालं सस्मरयत्याध्यापयति ॥१२॥

मदनवशविसंष्ठुलमिति—मदनस्य कामस्य वशेनायत्तत्वेन विसंष्ठुलं यथास्यात्तथा।

कुसुमायुधेति—कुसुमायुधप्रियदूतकः मुकुलायितबहुचूतकः शिथिलितमानग्रहणकः दक्षिणपवनकः वाति। इत्यन्वयः। कुसुमायुधस्य कुसुमानि पुष्पाण्यायुधानि यस्य तस्य प्रियतो दूतो मुकुलायिता मुकुलैः कलिकाभिर्निर्मिता बहवश्चूता आम्रा येन सः शिथिलितं मन्दीकृतं मानस्य प्रणयकलहस्य ग्रहणं स्वीकरणं येन स दक्षिणो दक्षिणदिगुत्पन्नः पवन एव पवनको वाति वहति ॥१३॥

[विकसितवकुलाशोककः काङ्क्षितप्रियजनमेलकः ।
प्रतिपालनासमर्थकस्ताम्यति युवतिसार्थकः ॥१४॥

इह पढम महुमासो जणस्स हिअलाइं कुणइ मिउलाई ।
पच्छा विज्झइ कामो लद्धप्पसरेहिं कुसुमबाणेहिं ॥१५॥

[इह प्रथमं मधुमासो जनस्य हृदयानि करोति मृदुलानि ।
पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥१५॥]

राजा—(निर्वर्ण्य सविस्मयम्) अहो निर्भरः क्रीडारसः परिजनस्य । तथाहि—

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबायां नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥१६॥

---

विकसितवकुलेति—विकसितवकुलाशोककः काङ्क्षितप्रियजनमेलकः प्रतिपालनासमर्थकः युवतिजनसार्थकः ताम्यति । इत्यन्वयः । विकसिताः पुष्पिता बकुलाश्चाशोकाश्च येन सः, पादाघातैरशोको विकसति बकुलो योषितामास्यमद्यैरिति कविसमयात्, काङ्क्षितोऽभिलषितः प्रियजनैर्मेलकः सङ्गमो येन सः, प्रतिपालनासमर्थकः प्रतिपालने प्रियागमनप्रतीक्षणेऽसमर्थ एवासमर्थको युवतीनां सार्थ एव सार्थकः समूहस्ताम्यति खिद्यते ॥१४॥

इह प्रथममिति—इह प्रथमं मधुमासः जनस्य हृदयानि मृदुलानि करोति पश्चात् कामः लब्धप्रसरैः कुसुमबाणैः विध्यति । इत्यन्वयः । इहास्मिन् वसन्तावतारे प्रथमं पूर्वं मधुमासो वसन्तमासो जनस्य लोकस्य हृदयानि मृदुलानि कोमलानि कुसुमशरभेदयोग्यानि करोति, पश्चात्तदनन्तरं कामो लब्धः प्रसरोऽवकाशो यैस्तैः कुसुमैश्च तैर्बाणैश्च कुसुमबाणैः पुष्पशरैर्विध्यति भिनत्ति ॥१५॥

राजा परिजनस्य क्रीडारसनिर्भरत्वं वर्णयति स्रस्तः स्रग्दामेति—क्षीबायाः

मौलसरी तथा अशोक को विकसित करने वाला, प्रियजनों के साथ की इच्छा करने वाला, (प्रिय के आगमन की प्रतीक्षा करने में असमर्थ युवतियों का समूह व्याकुल हो रहा है ॥१४॥

यहाँ (वसन्त आरम्भ होने पर) पहले वसन्त मास लोगों के हृदयों को कोमल कर देता है, (तब) बाद में, कामदेव अवसर पाए हुए पुष्प-बाणों से बींध देता है ॥१५॥

राजा—(आश्चर्य से देखकर) आह ! सेवकों को (तो) क्रीडा का बड़ा आनन्द (आ रहा है) । जैसे कि—

मधु-पान से मत्त हुई (और) स्तनों के भार से झुकते हुए कटिभाग के टूटने की चिन्ता करके नाचती हुई इस (सेविका) का खुला हुआ (अतः) बिखरा हुआ जूड़ा, मानो पीडा के कारण, किये गये पुष्प-मालाओं के प्रसाधन को छोड़ रहा है, ये पैरों में बंधे हुए दोनों नूपुर (मानो पीडा के कारण और दुगुना चिल्ला रहे हैं, कम्पन की निरन्तरता के कारण झूलता हुआ यह हार (मानो पीडा से) अनवरत छाती पीट रहा है ॥१६॥

---

स्तनभरविनमन्मध्यभङ्गानपेक्षं क्रत्यन्त्याः अस्याः स्रस्तः आकुलः केशपाशः पीडयेव विरचितां स्रग्दामशोभां त्यजति, इमौ पादलग्नौ नूपुरौ (पीडयेव) द्विगुणतरं क्रन्दतः, कम्पानुबन्धाद् व्यस्तः अयं हारः (पीडयेव) अनवरतम् उरः हन्ति । इत्यन्वयः । क्षीबाया मधुपानेन मत्ताया अतः स्तनयोर्भरेण भारेण विनमन् नम्रीभवन् यो मध्यः कटिभागस्तस्य भङ्गस्तत्रानपेक्षाऽनवधानं यस्मिन् कर्मणि तत्तथा क्रीडन्त्या अस्याः पुरो दृश्यमानायाः स्रस्तो बन्धनाद् विगलित आकुलो व्यस्तः केशपाशः केशकलापः पीडयेव व्यथयेव विरचितां कृतां स्रग्दाम्नो माल्यगुणस्य शोभां त्यजति । इमौ पादयोर्लग्नौ ससक्तौ नूपुरौ मञ्जीरौ पीडयेव द्विगुणतरं द्वौ गुणावावृत्ती यस्य तद् द्विगुणमतिशयेन द्विगुणं द्विगुणतरं यथा स्यात्तथा क्रन्दतो रुदन्तौ स्तः । कम्पानुबन्धात् कम्पस्यानुबन्धः सन्ततत्वं तस्माद् व्यस्त इतस्ततः क्षिप्तोऽयं हारः पीडयेवानवरतं सततमुरो वक्षो हन्ति ताडयति ॥१६॥

विदूषकः – भो वअस्स, अहं पि एदाणं मज्झे गदुअ णच्चन्तो गाअन्तो मअणमहूस्सवं माणइस्सं। [भो वयस्य, अहमप्येनामां मध्ये गत्वा नृत्यन् गायन् मदनमहोत्सवं मानयिष्यामि।]

राजा—(सस्मितम्) वयस्य एवं क्रियताम्।

विदूषकः—जं भवं आणवेदि। (उत्थाय चेट्योर्मध्येनृत्यन्) भोदि मअणि भोदि चूवलदिए मं पि एदं चच्चरिं सिक्खावेध। [यद्भवानाज्ञापयति। भवति मदनिके भवति चूतलतिके। मामप्येतच्चर्चरिकं शिक्षयतम्।]

उभे—हदास ण क्खु एसा चच्चरी। [हताश, न खलु एषा चर्चरी।]

विदूषकः—ता किं णु एद। [तत्कि खल्वेतत्।]

मदनिका—दुवदीखण्डं णु एदं। [द्विपदीखण्ड खल्वेतत्।]

विदूषकः—(सहर्षम्) किं एदिणा खण्डेण मोअआ करिअन्ति। [किमेतेन खण्डेन मादकाः क्रियन्ते।]

मदनिका—(विहस्य) णहि णहि। पढीअदि ता क्खु एदं। [नहि नहि पठ्यते खल्वेतत्।]

विदूषकः—(सविषादम्) जइ पढीअदि ता अलं मम एदिणा। वअस्सस्स सहासं जेव्व गमिस्सम्। (गन्तुमिच्छति।) [यदि पठयते तदलं ममैतेन वयस्यस्य सकाशमेव गमिष्यामि।]

उभे—(हस्ते गृहीत्वा) एहि कीलम्ह। वसन्तअ कहिं गच्छसि। (इ बहुविधं वसन्तकमाकर्षतः)। [एहि क्रीडामः। वसन्तक, कुत्र गच्छसि।]

विदूषकः—(हस्तमाकृष्य प्रपलाय्य राजानमुपसृत्य।) वअस्स णच्चिदोम्हि णहि णहि। कीलिअ पलाइदोम्हि। [वयस्य नर्तितोऽस्मि। नहि नहि, क्रीडि पलायितोऽस्मि।]

राजा—साधु कृतम्।

चूत०—हञ्जे मअणिए चिरं क्खु अम्हेहिं कीलिदम्। [हञ्जे मदनिके चि खल्वाभ्यां क्रीडितम्।] ता एहि णिवेदेम्ह दाव भट्टिणीए संदेसं महाराअस्र [तदेहि निवेदयावस्तावत् भर्त्रा सदेश महाराजस्य।]

मदनिका—सहि, एवं करेम्ह। [सखि, एवं कुर्वः।]

विदूषक—ए मित्र, मैं भी इन दोनों के बीच में जाकर नाचता-गाता मदन-महोत्व मनाऊंगा।

राजा—(मुस्कराते हुए) मित्र, ऐसा (ही) करो।

विदूषक—(उठकर, चेटियों के बीच मे नाचते हुए) श्रीमती मदनिका जी, श्रीमती चूतलतिका जी, मुझे भी यह चर्चरी सिखा दो।

दोनों—(जोर से हँसकर) मूर्ख, यह चर्चरी नहीं है।

विदूषक—तो, यह क्या है ?

मदनिका—यह तो द्विपदी-खण्ड है।

विदूषक—(हर्ष से) क्या इस खण्ड (=खांड) से लड्डू बनाये जाते हैं ?

दोनों चेटियां—(जोर से हँसकर) नहीं, नहीं ! यह तो पढ़ी जाती है।

विदूषक—(विषाद से) यदि पढ़ी जाती है तो मेरे लिए इससे बस करो। मैं तो प्रिय मित्र के समीप ही जाता हूँ। (जाना चाहता है)

दोनों—(हाथ पकड़कर) आओ, खेलें। वसन्तक, कहाँ जाते हो ? (वसन्तक को इधर-उधर खींचती हैं)

विदूषक—(हाथ खींचकर, दौड़कर राजा के पास जाकर) प्रिय मित्र, मैं नाच लिया। ना, ना, खेलकर भाग आया।

राजा—अच्छा किया।

चूतलतिका—सखी मदनिका, हम दोनों बहुत देर खेल ली। तो आओ, अब महाराज को स्वामिनी का सन्देश निवेदन कर दें।

मदनिका—सखी ऐसा (ही) करें।

चेट्यौ—(परिक्रम्योपसृत्य च) जेदु जेदु भट्टा । भट्टा, देवी आणवेदि- (इत्यर्धोक्ते लज्जां नाटयन्त्यौ) णहि णहि । विण्णवेदि । [जयतु जयतु भर्ता । भर्तः देव्याज्ञापयति । नहि नहि । विज्ञापयति ।]

राजा—(विहस्य सादरम्) मदनिके, नन्वाज्ञापयतीत्येव रमणीयम् । विशेषतोऽद्य मदनमहोत्सवे । तत्कथय, किमाज्ञापयति देवी ।

विदूषकः—आः दासीए धीए, किं देवी आणवेदी । [आः दास्याः पुत्रि, किं देव्याज्ञापयति ।

चेट्यौ—एव्वं देवी विण्णवेदि—अज्ज क्खु मए मअरन्दुज्जाणं गदुअ रत्तासोअपाअवतलसंट्ठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा । तहिं अज्जउत्तेण संणिहिदेण होदव्वत्ति । [एवं देवी विज्ञापयति—अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोकपादपतलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या । तत्र आर्यपुत्रेण संनिहितेन भवितव्यमिति ।]

राजा—(सानन्दम्) वयस्य ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितमिति ।

विदूषकः—भो वअस्स ता उट्ठेहि । तहिं जेव्व गच्छम्ह जेण तहिं गदस्स मम वि बम्हणस्स सोत्थिवाअणं किंवि भविस्सदि । [भो वयस्य, तस्मादुत्तिष्ठ तत्रैव गच्छावः । येन तत्र गतस्य ममापि ब्राह्मणस्य स्वस्तिवाचनं किमपि भविष्यतीति ।

राजा—मदनिके, गम्यतां देव्यै निवेदयितुमयमहमागत एव मकरन्दोद्यानमिति ।

चेट्यौ—जं भट्टा आणवेदि । (इति निष्क्रान्ते) । [यद्भर्ताऽऽज्ञापयति ।]

राजा—वयस्य, एहि । अवतरावः । (उभौ प्रासादावतरणं नाटयतः) वयस्य, आदेशय मकरन्दोद्यानस्य मार्गम् ।

विदूषकः—जं भवं आणवेदि एदु एदु भवं । [यद्भवानाज्ञापयति । एत्वेतु भवान् ।]

(इति परिक्रामतः)

विदूषकः—(अग्रतोऽवलोक्य) भो एदं तं मअरन्दुज्जाणं । ता एहि । पविसम्ह । [भो एतत्तन्मकरन्दोद्यानम् । तदेहि । प्रविशावः ।]

दोनों चेटी—(घूमकर और समीप जाकर) स्वामी की जय हो। स्वामी, महारानी आज्ञा देती हैं······(यह आधा कह कर लज्जा का नाट्य करती हुई) ना, ना, विवेदन करती है।

राजा—(हंसकर,.आदर से) मदनिका, 'आज्ञा देती हैं' बस यही सुन्दर है, विशेषकर आज मदन-महोत्सव में। तब बतलाओ महारानी क्या आज्ञा देती हैं।

विदूषक—ए, दासी की बेटी, क्या देवी आज्ञा दे रही हैं ?

दोनों चेटी—देवी यह निवेदन करती हैं—कि आज मुझे मकरन्द नाम के उद्यान में जाकर रक्ताशोक वृक्ष के नीचे प्रतिष्ठापित भगवान् कामदेव की पूजा करनी है। वहाँ आर्यपुत्र उपस्थित होवें।

राजा—(आनन्द के साथ) प्रिय मित्र, अब तो यह कहना चाहिये कि एक उत्सव के पश्चात् दूसरा उत्सव आ गया।

विदूषक—हे प्रिय मित्र, तब उठो। वहीं चलें, क्योंकि वहाँ जाने पर मुझ ब्राह्मण का भी कुछ स्वस्तिवाचन हो जायेगा।

राजा—मदनिका, जाओ, महारानी से निवेदन करो कि बस मैं यह मकरन्द उद्यान में आ ही गया।

दोनों चेटी—जो स्वामी आज्ञा दें। (यह कहकर चली जाती है)

राजा—प्रिय मित्र, आओ। नीचे चलें। (दोनों महल से उतरने का अभिनय करते हैं) प्रिय मित्र, मकरन्द उद्यान का मार्ग बतलाओ।

विदूषक—जो आप आज्ञा देवें। चलिये, चलिये।

(दोनो घूमते हैं)

विदूषक—(आगे देखकर) अरे, यह वह मकरन्द उद्यान है। तो आओ, अन्दर चलें।

(इति प्रविशतः)

विदूषकः—(अवलोक्य सविस्मयम्) भो वअस्स, पेक्ख पेक्ख । एवं क्खु तं मलअमारुदान्दोलणपहुल्लन्तसहआरमञ्जरीरेणुपडलपडिबद्धपडविदाणं मत्तमहुअरमुक्कझंकारमिलिदमहुरकोइलारावसंगीदसुविसुहं तुहागमणदंसिदाअरं विअ मअरन्दुज्जाणं लक्खीअदि । ता पेक्खदु भवं । [भो वयस्य, प्रेक्षस्व । एतत् खलु तन्मलयमारुतान्दोलनप्रफुल्लत्सहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकरमुक्तझङ्कारमिलितमधुरकोकिलारावसंगीतश्रुतिसुखं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते । भवान् ।]

राजा—(समन्तादवलोक्य) अहो रम्यता मकरन्दोद्यानस्य । इह हि—

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥१७॥

अपि च

मूले गण्डूषसेकासव इव बकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।

---

मलयमारुतान्दोलनेति—मलयस्य मारुतेन यदान्दोलनमितस्ततो विक्षेपस्तस्मात्कारणात् (पतन्तो ये) प्रफुल्लन्तीनामाम्रमञ्जरीणां रेणवः परागास्तेषां पटलेन समूहेन प्रतिबद्धं विरचितं पटवितानमुल्लोचो यस्मिन् तदिति मकरन्दोद्यानविशेषणम् । मत्तमधुकरेति—मत्तैर्मधुकरैर्भ्रमरैर्मुक्त उत्सृष्टो यो झङ्कारो गुञ्जनशब्दस्तेन मिलितो यो मधुरः कोकिलानामारावः शब्दः स एव संगीतं तेन श्रुतिभ्यां सुखयतीति सुखं सुखकरम् । तवागमनदर्शितेति—तवागमने दर्शितं आदरो येन तदिवेत्युत्प्रेक्षा ।

उद्यद्विद्रुमेति—अमी द्रुमाः अधुना मधुप्रसङ्गं प्राप्य उद्यद्विद्रुमकान्तिभिः किसलयैः ताम्रां त्विषं बिभ्रतः कलैः भृङ्गालीविरुतैः अविशदव्याहारलीलाभृतः,

(दोनो प्रवेश करते है)

विदूषक—(देखकर, आश्चर्य से) ए प्रिय मित्र, देखो, देखो। यह मकरन्द उद्यान, जिसमे मलय की वायु द्वारा झकझोर से खिलते हुए आम के बौर के पराग-समूह से शामियाना ताना है और जो मत्त भौरों से की गई झकार से मिली हुई कोयलों की मीठी कूक के सगीत से श्रोत्रो को सुखदायी है, मानो, तुम्हारे आने पर आदर दिखलाता हुआ प्रतीत होता है। इसलिये आप देखें।

राजा—(चारों ओर देखकर) आ! हा! मकरन्द उद्यान की रमणीयता *(आश्चर्यकारी है) क्योंकि यहाँ—*

. अब वसन्त ऋतु के सपर्क (अन्य अर्थ-मद्य के सपर्क) को पाकर उगते हुए मूँगों की कान्ति वाले नूतन पल्लवो से लाल कान्ति को धारण करते हुए, मधुर भ्रमर-माला की गुञ्जार से अस्पष्ट प्रलाप की चेष्टा को धारण करने वाले (और) मलय वायु के आघात से चञ्चल शाखाओं के समूहों से बार-बार झूमते हुए ये वृक्ष, मानो, मत्त-से प्रतीत होते है ॥१७।

और भी—

मौलसरी के वृक्ष जड़ मे मुंह मे भर-भरकर सीचे गये मद्य को पुष्प-वृष्टि से मानो, सुगन्धित कर रहे है, सुन्दरी युवति के मुखरूपी चन्द्रमा के मद्य से आरक्त होने पर चिरकाल बाद आज चम्पा के पुष्प शोभित हो रहे हैं और भ्रमरों के

---

मलयानिलहतिचलैः शाखासमूहैः मुहुः घूणन्तः मत्ता इव भान्ति। इत्यन्वयः। अमी एते द्रुमा वृक्षा अधुना सम्प्रति मधुप्रसङ्गं मधोर्वसन्तस्य पक्षे मधुनो मद्यस्य प्रसङ्ग सपर्कं प्राप्योद्यता प्ररोहतां विद्रुमाणा प्रवालाना कान्तय इव कान्तयो येषां तैः किसलयैर्नूतनपल्लवैर्हेतुभिस्ताम्रामोपरक्ता त्विव कान्ति बिभ्रतो धारयन्तः कलं व्यक्तमधुरैर्भृङ्गालीनां भ्रमरपङ्क्तीनां विरुतैर्गुञ्जनैरविशदोऽविस्पष्टो यो व्याहारो भाषितं तस्य लीला चेष्टा बिभ्रतीति लीलाभृतो मलयानिलस्य पवनस्याहतिभिस्ताडनैश्चलैश्चञ्चलैः शाखाना समूहैर्मुहुः पुनःपुनर्घूर्णन्तो भ्रमन्तो मत्ता इव भान्ति ॥१७॥

मूले गण्डूषसेकेति—बकुलैः मूले गण्डूषसेकासवः पुष्पवृष्ट्या वास्यते इव। तरुण्याः मुखशशिनि मध्वाताम्रे (सति) अद्य चम्पकानि चिराद् भान्ति

आकर्ण्याशोकपादाहतिषु च रसितां निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः ॥१८॥

विदूषकः—(श्रुत्वा) भो वअस्स, ण एदे महुअरा णेउरसद्दं अणुहरन्ति। णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स। [भो वयस्य, नैते मधुकरा नूपुरशब्दमनुहरन्ति। नूपुरशब्द एवैष देव्याः परिजनस्य।]

राजा—वयस्य सम्यगुपलक्षितम्।

(ततः प्रविशति वासवदत्ता, काञ्चनमाला, पूजोपकरणहस्ता सागरिका, विभवतश्च परिवारः।)

वासवदत्ता—हञ्जे कञ्चणमाले, आदेसेहि मे मअरन्दुज्जाणस्स मग्गं।
[हञ्जे काञ्चनमाले, आदेशय मे मकरन्दोद्यानस्य मार्गम्।]

काञ्चनमाला—एदु एदु भट्टिणी। [एत्वेतु भर्त्री।]

वास०—(परिक्रम्य) हञ्जे कञ्चणमाले, अध केत्तिअ दूरे सो रत्तासोअपाअवो जहिं मए भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा। [हञ्जे काञ्चनमाले, अथ कियद्दूरे स रक्ताशोकपादपो यत्र मया भगवतः कुसुमायुधस्य पूजा निर्वर्तयितव्या।]

काञ्च०—भट्टिणि, आसण्णो ज्जेव्व। किं ण पेक्खदि भट्टिणी। इमं क्खु सा णिरन्तरुब्भिण्णकुसुमसोहिणी भट्टिणीए परिग्गहिदा माहवी लदा। एसा वि अवरा णोमालिआ लदा जाए अआलकुसुमसमुग्गमसद्धालुण भट्टिणा अणुदिणं आआसीअदि अप्पा। ता एदं अदिक्कमिअ दीसदि ज्जेव सो रत्तासोअपाअवो जहिं देवी पूअं णिव्वत्तइस्सदि। [भर्त्रि, आसन्न एव। किं न प्रेक्षते भर्त्री। इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्र्या परिगृहीता माधवीलता। एषाप्यपरा नवमालिका लता यस्या अकालकुसुमसमुद्गमश्रद्धालुना भर्त्रानुदिनमायास्यत

भृङ्गसार्थैः अशोकपादाहतिषु भृशं रणतां नूपुराणां झङ्कारस्य आकर्ण्य अनुगीतैः अनुरणनमिव आरभ्यते। इत्यन्वयः। वकुलैः केसरवृक्षैर्मूले पादे गण्डूषसेकस्यासवो मद्यं पुष्पाणां वृष्ट्या वास्यते सुरभीक्रियते इव। तरुण्या युवत्या मुखमेव शशी तस्मिन् मधुना मद्येनाताम्रे ईषद्रक्ते सत्यद्य चम्पकानि चम्पकपुष्पाणि

समूह (युवतियों के) अशोक वृक्षो को पैर से ताडन करने मे जोर से बजते हुये नूपुरों की झकार को सुनकर किये गये अपने गुंजारों से, मानों (युवतियो के नूपुरों की झकार को) गुनगुना रहे हैं ॥१८॥

विदूषक—(सुनकर) हे मित्र, यह भौरे नूपुर की ध्वनि का अनुकरण नही कर रहे, (अपितु) यह महारानी की दासियो के नूपुरो की ध्वनि ही है।

राजा—मित्र, (तुमने) ठीक पहचाना।

(तब वासवदत्ता, काञ्चनमाला हाथ मे पूजा की सामग्री लिये सागरिका और श्रेणी के अनुसार सेवक-समूह प्रवेश करता है।)

वासवदत्ता—सखी काञ्चनमाला, मुझे मकरन्द उद्यान का मार्ग बतलाओ।

काञ्चनमाला—स्वामिनी चलें चलें।

वासवदत्ता—(घूमकर) सखी काञ्चनमाला, अब वह रक्ताशोक वृक्ष कितनी दूर है, जहाँ मुझे भगवान् कामदेव की पूजा करनी है।

काञ्चनमाला—स्वामिनी, आ ही गया। क्या स्वामिनी देख नही रहीं? निश्चय ही, यह वह घने खिले पुष्पों से शोभा देने वाली, स्वामिनी द्वारा अपनाई गई माधवी लता है। और यह दूसरी नवमालिका लता है, जिसके बिना ऋतु पुष्पोद्गम मे विश्वास करने वाले स्वामी प्रतिदिन स्वयं को कष्ट दे रहे

---

चिरात् सुदीर्घकालस्य पश्चाद् भान्ति प्रकटीभवन्ति। भृङ्गाणां भ्रमराणां सार्थैः समूहैरशोकवृक्षाणां पादाभ्यामाहतिषु ताडनेषु भृशमुत्कट रणतां ध्वनिं कुर्वतां नूपुराणां मञ्जीराणां झङ्कारस्याकर्ण्यानुगीतैर्गानैरनुरणनं पश्चाद् ध्वननमिवारभ्यते ॥१८॥

निरन्तरोद्भिन्नेति—निर्गतमन्तरं यस्मात्तद् तथा स्यात्तथा निरन्तरमुद्भिन्नान्युद्गतानि कुसुमानि तैः शोभत इति। अकालकुसुमेति—अकालेऽनृतौ कुसुमानामुद्गमे प्रसवे श्रद्धालुना विश्वासवता।

आत्मा। तदेनामतिक्रम्य इदयत एव स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति ।]

वासव०—ता एहि। तहिं ज्जेव्व लहुं गच्छम्ह । [तदेहि तत्रैव लघु गच्छामः ।]

काञ्च०—एदु एदु भट्टिणी । [एत्वेतु भर्त्री ।]

(सर्वाः परिक्रामन्ति)

काञ्च०—भट्टिणि, अअं खु सो रत्तासोअपाअवो जहिं देवी पूआं णिव्वत्तइस्सदि। भर्त्रि, अयं खलु स रक्ताशोकपादपो यत्र देवी पूजां निर्वर्तयिष्यति ।]

वास०— तेन हि मे पूआणिमित्ताइं उवअरणाइं उवणेहि। [तेन हि मे पूजानिमित्तान्युपकरणान्युपानय ।]

साग०—(उपसृत्य) भट्टिणि, एदं सव्वं सज्जम् । [भर्त्रि, एतत्सर्वं सज्जम् ।]

वास०—(निरूप्यात्मगतम्) अहो पमादो परिअणस्स। जस्स ज्जेव्व दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव्व दिट्ठिगोअरे पडिदा भवे। भादु। एवं भणिस्सं। (प्रकाशम्) हञ्जे साअरिए, कीस तुम अज्ज मअणमहूस्सवपराहीणे परिअणे सारिअं उज्झिअ इध आअदा। ता तहिं ज्जेव्व लहुं गच्छ। एदं वि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहिं। [अहो प्रमादः परिजनस्य। यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरे पतिता भवेत्। भवतु। एवं तावद्भणिष्यामि। हञ्जे सागरिके, कस्मात्त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वेहागता। तत्तत्रैव लघु गच्छ। एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय ।]

साग०—जं भट्टिणी आणवेदि। (इति तथा कृत्वा कतिचित्पदानि गत्वा आत्मगतम्) सारिआ मए उण सुसंगदाए हत्थे समप्पिदा। एदं वि अत्थि मे पेक्खिदुं कोदुहलं किं जहा तादस्स अन्तेउरे भअवं अणंगो अच्चिअदि इह वि तहज्जेव्व किं अण्णहेत्ति। ता अलक्खिदा भविअ पेक्खिस्सं (परिक्रम्यावलोक्य च) ता जाव इह पूआसमओ होदि ताव अहं पि भअवन्तं अणंगं ज्जेव पूअइदुं कुसुमाइं अवचिणिस्सं। (इति कुसुमावचयं नाटयति। [यद्भर्त्र्याज्ञापयति। सारिका मया पुनः सुसङ्गताया हस्ते समर्पिता। एतदप्यस्ति मे प्रेक्षितुं कौतूहलं किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, अत्रापि तथैव किमन्यथेति।

हैं। तो इसे पार करके वह रक्ताशोक वृक्ष दीख ही पड़ रहा है, जहाँ देवी पूजा करेंगी।

वासवदत्ता—तो आओ। शीघ्र वहीं चलें।

काञ्चनमाला—स्वामिनी चलिये, चलिये।

(सब घूमती हैं)

काञ्चनमाला—स्वामिनी, यही वह रक्ताशोक वृक्ष है, जहाँ महारानी पूजा करेंगी।

वासवदत्ता—तब मुझे पूजा के लिये सामग्री दो।

सागरिका—(समीप जाकर) स्वामिनी, यह सब तैयार है।

वासवदत्ता—(देखकर मन ही मन) ओह! सेवकों की लापरवाही जिसके ही दृष्टि-पथ से प्रयत्न पूर्वक बनाई जा रही है, उसकी ही दृष्टि में पड़ जायेगी। अच्छा, तब ऐसे कहूँगी। (प्रकट में) सखी सागरिका, आज सेवकों से मदन-महोत्सव से बे-सुध होते हुए तू सारिका को छोड़कर यहाँ कैसे आ गई। जल्दी से वहीं पहुँच और इस सब पूजा की सामग्री को काञ्चनमाला के हाथ में सौंप दे।

सागरिका—जो स्वामिनी आज्ञा दें। (वैसा ही करके और कुछ पद जाकर, स्वगत) सारिका तो मैंने सुसङ्गता के हाथ सौंप दी है। फिर, मुझे यह देखने की उत्सुकता है कि पिता के अन्तःपुर में भगवान कामदेव की जैसे पूजा होती है, क्या यहाँ भी वैसे ही होती है, या अन्यथा। इसलिये छिपकर देखूँगी। (घूमकर और देखकर), जब तक यहाँ पूजा का समय होवे, तब तक मैं भी भगवान कामदेव ही की पूजा के लिये पुष्प चुनती हूँ। (पुष्प चुनने का नाट्य करती है)।

तस्मादलक्षिता भूत्वा प्रेक्षिष्ये । तद्यावदिह पूजासमयो भवति तावदहमपि भगवन्तमनङ्गमेव पूजयितुं कुसुमान्यवचेष्यामि ।]

वास०—कञ्चणमाले, पडिट्ठावेहि असोअमूले भअवन्तं पज्जुण्णं ।

[काञ्चनमाले, प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम्]

काञ्च०—जं भट्टिणी आणवेदि। (इति तथा करोति) । [यद्भर्त्र्याज्ञापयति]

विदू०—भो वअस्स, जधा वीसन्तो णेउरसद्दो तधा तक्केमि आअदा देवी असोअमूलंत्ति । [भो वयस्य, यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयाम्यागता देव्यशोकमूलमिति ।

राजा—(अवलोक्य) वयस्य, सम्यगवधारितम् । पश्येयं देवी या किलैषा-

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥१९॥

तदेहि । उपसर्पावः । (उपसृत्य) प्रिये वासवदत्ते ।

वास०—(विलोक्य) कधं अज्जउत्तो । जअदु जअदु अज्जउत्तो । एदं आसणं। एत्थ उवविसदु अज्जउत्तो । [कथमार्यपुत्रः । जयतु जयत्वार्यपुत्रः । एतदासनं अत्रोपविशत्वार्यपुत्रः ।]

(राजा नाट्येनोपविशति)

काञ्च०—भट्टिणि, सहत्थदिण्णेहि कुङ्कुमचन्दणथासएहिं सोहिदं कदुअ रत्तासोअपाअवं अच्चीअदु भअवं पज्जुण्णो । [भर्त्रि, स्वहस्तदत्तैः कुङ्कुमचन्दन-स्थासकैः शोभितं कृत्वा रक्ताशोकपादपमर्च्यतां भगवान्प्रद्युम्नः ।]

वासव०—उवणेहि मे पूओवअरणाइं । [उपनय मे पूजोपकरणानि ।]

काञ्चनमालोपनयति । वासवदत्ता तथा करोति ।)

राजा—प्रिये

---

कुसुमसुकुमारेति—कुसुमसुकुमारमूर्तिः नियमेन तनुतरं मध्यं दधती (एषा

वासवदत्ता—काञ्चनमाला, अशोक की मूल में भगवान् कामदेव की प्रतिष्ठापना करो।

काञ्चनमाला—जो स्वामिनी की आज्ञा हो। (वैसा करती है)

विदूषक—हे मित्र, जैसे कि नूपुरों की ध्वनि शान्त हो गई है, उससे समझता हूँ कि महारानी अशोक की मूल पर पहुँच गई है।

राजा—(देखकर) मित्र, ठीक समझा। देखो, यह महारानी है जो यह—

पुष्प के समान कोमल शरीर वाली (और) व्रत-उपवास जो क्षीणतर कटि को धारण करती हुई कामदेव के समीप में स्थित, मानो, धनुर्यष्टि-सी लगती है ॥६॥

तो आओ। पास चलें। (समीप जाकर) प्रिय वासवदत्ता।

वासवदत्ता—(देखकर) कैसे ! आर्यपुत्र !! आर्यपुत्र की जय हो, जय हो। (लीजिये) यह आसन। आर्यपुत्र इस पर बैठें।

(राजा बैठने का नाट्य करता है)

काञ्चनमाला—स्वामिनी, रक्ताशोक वृक्ष को अपने हाथ लगाये गये केसर के लेप से भूषित करके भगवान् प्रद्युम्न की पूजा कीजिये।

वासवदत्ता—पूजा की सामग्री मेरे पास लाओ।

(काञ्चनमाला समीप ले जाती है और वासवदत्ता वैसा करती है)

राजा—प्यारी,

---

देवी) मकरकेतोः पार्श्वस्था चापयष्टिरिव आभाति। [illegible] सुकुमारा कोमला मूर्तिः कायो यस्याः सा पक्षे [illegible] सा, नियमेन व्रतेन पक्षे नियमेन निश्चयेन [illegible] पक्षे मध्यभागं दधती धारयन्ती देवी वासवदत्ता [illegible] कामदेवस्य पार्श्वस्था, समीपस्था चापयष्टि[illegible]

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव ॥२०॥

अपि च

स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥२१॥

अपि च

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव । २३॥

काञ्च०—भट्टिणि, अचिन्दो भअवं पज्जुण्णो । ता करेहि भत्तुणो उइदं पूआसक्कारम् । [भर्त्रि, अर्चितो भगवान् प्रद्युम्नः । तत्कुरु भर्तुरुचित पूजासत्कारम् ।]

वास०—तेण हि उवणेहि मे कुसुमाइं विलेवणं च । [तेन हि उपनय मे कुसुमानि विलेपनं च ।]

---

स्वहस्तेति—स्वहस्तेन दत्ता या कुङ्कुमस्य चर्चिका चर्चा तया शोभित विभूषितम् ।

प्रत्यग्रमज्जनेति—प्रत्यग्रमज्जनविशेषविविक्तकान्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता मकरकेतनमर्चयन्ती बालप्रवालविटपिप्रभवा लतेव विभ्राजसे। इत्यन्वयः। प्रत्यग्रेणाचिरवृत्तेन मज्जनेन स्नानेन विशेषेणाऽधिक विविक्तोज्ज्वला कान्तिर्यस्याः सा, पक्षे प्रत्यग्र -यन्मज्जन जलसिञ्चनं तेन विशेषेण विविक्ता स्वच्छा कान्तिर्यस्यास्तादृशी, कौसुम्भरागरुचिरस्फुरदंशुकान्ता कौसुम्भेन कुसुम्भपुष्पजन्येन रागेण रञ्जनद्रव्येण रुचिरः सुन्दरः स्फुरन् लसंश्चांशुकस्य पटस्यान्तो यस्याः सा पक्षे कौसुम्भस्येव कौसुम्भपुष्पस्येव यो रागो लौहित्यं तेन रुचिरा स्फुरद्भिरंशुभिः किरणैः कान्ता रमणीया च, मकरकेतनं कामदेवमर्च-

